# न्याय-सिद्धान्त-मुक्तावली-दीपिका

## ( अनुमानखण्डतो-गुणनिरूपणंयावत )

### ( प्रश्नोत्तरी )

सम्पादक :

आचार्य श्री जयकान्त झा "बख्शी"

प्रकाशक

भा र ती य वि द्या प्र का श न

वाराणसी दिल्ली

# न्याय-सिद्धान्त-मुक्तावली-दीपिका

## ( अनुमानखण्डतो-गुणनिरूपणं यावत् )

( प्रश्नोत्तरी )

सम्पादक:

आचार्य श्री जयकान्त झा "बखशी"

भारतीय विद्या प्रकाशन

वाराणसी दिल्ली

प्रकाशक: —

© भारतीय विद्या प्रकाशन

१. पो० बा० नं० ११०८ कचौड़ी गली, वाराणसी–२२१००१

२. १. यू० बी० बंग्लो रोड जवाहरनगर, दिल्ली—११०००७

अन्य प्राप्ति स्थान :—

भारतीय बुक कारपोरेशन

१ यू० बी० बंग्लो रोड, जवाहरनगर दिल्ली–११०००७

प्रथम संस्करण १९८८ मई

मूल्य ३=५०

---

—: निवेदन :—

छात्रों की सुविधा के लिए अन्य गाइडों तथा प्रश्नोत्तरियों का भी प्रकाशन किया गया है। प्रत्येक वर्ष की भाँति इस बार भी सफलता के लिए **भारतीय विद्या प्रकाशन** की ही गाइडों का चयन करें।

---

मुद्रक

अञ्जनि मुद्रणालय

के० २०/१८७ राजमन्दिर, वाराणसी

# प्रश्नानुक्रमणिका

## अनुमानखण्डम्

## उपमान-खण्डम्



## शब्द खण्डम्

## स्मृतिः--निरूपणम्



## मनोनिरूपणम्



## गुणनिरूपणम्

# न्यायसिद्धान्तमुक्तावली दीपिका
# अनुमानखण्डात् गुणनिरूपणं यावत्

## अथानुमानखण्डम्

**प्रश्नः १**—ज्ञायमानलिङ्गं करणमनुमितौ अपेक्षितमस्ति न वेति विविच्यताम् ? (१९८६)

**उत्तरम्**—ननु प्राचीनानामुदयनाचार्यादीनां मतेन व्याप्यत्वेन ज्ञायमानं = परामृश्यमानं लिङ्गमेवानुमितौ करणं कथन्नापेक्षितमिति चेन्न, ज्ञायमान-लिङ्गस्यानुमितौ करणत्वाङ्गीकारे ऽनागतेन विनष्टेन वा लिङ्गेनानुमितिर्न स्यात्; अनुमितिकरणस्य तदानीमभावात्। तथा च इयं यज्ञशाला भाविवह्निमती भाविधूमात्, इयं यज्ञशाला अतीतवह्निमती अतीतधूमात् इति अनागत-विनष्टाभ्यां लिङ्गाभ्यामनुमितिर्न स्यात् तदानीं लिङ्गस्य धूमस्याभावात्।

तस्मात् व्याप्तिविशिष्टलिङ्गज्ञानमेवानुमितौ करणमपेक्षितं ननु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितौ करणमपेक्षितम् इति दिक्।

**प्रश्नः २**—साध्यवदन्यस्मिन्नसम्बन्ध इति मूलोक्तव्याप्तिलक्षणं विश्वनाथ-रीत्या व्याख्याय पर्यवसितं व्याप्तिलक्षणं निरूप्यताम् ?

**उत्तरम्**—व्याप्तिलक्षणघटकसाध्यवत्पदं लक्षणया साध्यवत्प्रतियोगिकपदं तस्य चाभेदसम्बन्धेन अन्यपदार्थैकदेशे भेदेऽन्वयः, न तु साध्यवत्पदार्थस्य प्रतियोगितासम्बन्धेन भेदे नामार्थयोरभेदसम्बन्धेनान्वय स्याव्युत्पन्नत्वात् भेदवतः सप्तम्यर्थनिरूपितत्वसम्बन्धेन वृत्तित्वरूपे सम्बन्धपदार्थे तस्य च प्रतियोगितासम्बन्धेनाभावेऽन्वयः। एवञ्च **'साध्यवत्प्रतियोगिकभेदवा-न्निरूपितवृत्तित्वाभावो व्याप्तिः।'** इति तदर्थं तत्र प्रतियोगिकान्तपदस्य साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकमात्रावच्छिन्नसाध्यमात्रनिष्ठा-

वच्छेकतानिरूपकप्रतियोगिताकेत्यर्थः। तेन च बह्निमान् धूमादित्यादौ साध्यं बह्निः साध्यवान् महानसादिः, तदन्यो जलह्रदादिः तदवृत्तित्वं धूमस्येति लक्षण समन्वयः। धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्राय:पिण्डादौ वह्नि सत्वान्नातिव्याप्तिप्रसंगः। तथा च---

साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वावच्छिन्ननिरू पितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाऽभावो व्याप्तिरिति पर्यवसितं व्याप्ति लक्षणमितिदिक्।

**प्रश्नः ३---साध्यवदन्यश्च साध्यवत्त्वच्छिन्नप्रतियोगिताकभेदवानि निवेशस्य फलं प्रतिपादयत ? [१९८६]**

**उत्तरम्**---साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवानि निवेशेन यत्किञ्चित् बह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्वेऽपि हामिः। अत्र येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्यावृत्तित्व बोध्यम्। तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः। इति दिक्।

**प्रश्नः ४---पूर्वपक्षव्याप्तौ हेतुतावच्छेदकंवृत्तितानवच्छेदकमिति निवेशस्य फलं प्रतिपादयत। (१९८६)**

**उत्तरम्**---पूर्वपक्षव्याप्तौ हेतुतावच्छेदकं वृत्तितानवच्छेदकमितिनिवेशे साध्यतावच्छेदकसम्बन्धावच्छिन्ना साध्यतावच्धेदकमात्रावच्छिन्ना या साध्य निष्ठाऽवच्छेदकता तन्निरूपितावच्छेद्यतावती या प्रतियोगिता तन्निरूपकभेद वन्निरूपिताया हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता तदनवच्छेदक यद्धेतु तावच्छेदकं तद्वत्वं व्याप्तिरिति व्याप्तिलक्षणं पर्यवसन्नमिति दिक्।

**प्रश्नः ५---कोऽयं परामर्शोनाम ? तत्स्वरूपं च किम् ? क्व चास्य अनुमितेःकारणमितिप्रतिपाद्यताम् ?**

**उत्तरम्**---"व्याप्यस्य पक्षवृत्तित्व धीः परामर्शः। अर्थात् व्याप्यस्य= व्याप्तिविशिष्टस्य पक्षवृत्तित्वधीः परामर्शः, अत एव व्याप्तिविशिष्ट पक्षधर्मता ज्ञानं परामर्श इत्यन्यत्र। 'पक्षे व्याप्य' इति ज्ञानं 'पक्षो व्याप्यवानि'ति ज्ञा

वा परामर्शः । यथा—पर्वतो वह्निमानित्यनुमितौ" वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं परामर्शः । इदमेव व्याप्तिविशिष्टवैशिष्टचावगाहि ज्ञानमनुमितेः कारणमितिदिक् ।

**प्रश्नः ६**—सावतरणं सिद्धांन्तव्याप्तिलक्षणं विविच्य हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणमिति निवेशस्य फलं विविच्यताम् (१९८६)

**उत्तरम्**—'अथवा हेतुमन्निष्टविरहाऽप्रतियोगिता ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥'

हेतुमति निष्ठा=वृत्तिर्यस्य स तथा विरहः=अभावः तथा च हेत्वाधिकरण-वृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोःसामानाधिकरण्यं व्याप्तिरुच्यते । यथा 'पर्वतोवह्निमान्ः' इत्यत्र हेतुर्धूमः तदधिकरणं महानसपर्वतादिः तद-वृत्तिरभावो घटाभावादिः तत्प्रतियोगी घटादिः, अप्रतियोगी वह्निः तेन साध्येन वह्निना हेतोः=धूमस्य सामानाधिकरण्यं=पर्वतमहानसादौ सेयं व्याप्तिरुच्यते । एवं च हेत्वधिकरणवृत्त्यभावाप्रतियोगि साध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणं निष्पन्नम् ।

ननु वह्निमान् धूमादित्यत्रैव हेत्वधिकरणे पर्वतादौ महानसीयवह्नेरभावः महानसे चत्वरीयवह्नेरभावश्चत्वरे गोष्ठीय वह्नेरभावः इत्यादिरूपेण वह्नि-रूपं साध्यं तद्भावाप्रतियोगी नास्ति, किन्तु प्रतियोग्येवेति लक्षणस्या व्याप्तिः स्यात् । एवं च घटो गुणो द्रव्यत्वादि" त्यत्रापि रक्तघटे पीतगुणस्याभावः, पीतघटे श्वेतगुणस्याभावोऽस्ति, गुणरूपं साध्यं तदभावस्य प्रतियोग्येव, अप्रति-योगी नास्ति इति लक्षणस्याव्याप्तिरितिचेन्न, हेत्वधिकरणवृत्यभावीयप्रतियोगिता-नवच्छेदकं यत्साध्यतावच्छेदकं तद्वच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणात् ।

एवं च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणमिति निवेशेन समवायेन धूमादिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिरिति दिक् ।

**प्रश्नः ७**—अनुमानस्य के पंचावयवाः ?

**उत्तरम्**—अनुमानस्य प्रतिज्ञाहेतू-दाहरणोपनय-निगमानि पंचावयवाः ।

ते यथा—

१- पर्वतो वह्निमान् इति प्रतिज्ञा ।

२- धूमवत्वात् इति हेतुः ।

३- यो यो वह्निमान स स धूमवान् यथा महानसमित्युदाहरणम् ।

४- तथा चायमित्युपनयः ।

५- तस्मात्तथा इति निगमनम् ।

एवं च पंचावयवानां संयोग एवानुमिति प्रक्रिया यथा-पर्वतो वह्निमान् धूमवत्त्वात, यो यो बह्निमान् स स धूमवान्' यथा महानसम्, तथा चाय तस्मात्तथा । इति दिक् ।

**प्रश्नः ८—अनुमानस्य पंचरूपोपपन्नत्वं सोदाहरणं प्रदर्शयत ।**

**उत्तरम्**—अनुमानस्य पंचरूपोपपन्नत्वं यथा— १—**पक्षसत्त्वम्**, २– सपक्षसत्त्वम्, ३– विवक्षव्यावृत्तत्वम् ४– अवाधितविषयत्वम् ५– असत्प्रतिपक्षत्वञ्च ।

तत्र पर्वतो वह्निमान् धूमादित्युदाहरणे—१– **पक्षसत्त्वम्**—पक्षे सत्त्वमिति । अत्र पक्षः पर्वतः, साध्यो वह्निः, तस्य निश्चय एव पक्षसत्त्वम् ।

२– **सपक्षसत्त्वम्**—पक्षसाधकमुदाहरणं सपक्षः । सत्वमत्रास्तित्वम् । साध्यस्य सत्त्वं सपक्षेऽन्वय-व्याप्तिदर्शनायावश्यकम् अत्रोदाहरणे सपक्षो महानसस्तत्र साध्यस्य वह्नेः सत्त्वमावश्यकम् ।

**विपक्षव्यावृत्तत्वम्**—व्यतिरेकव्याप्तेरङ्गं विपक्षस्तत्र असाध्यस्य असत्त्वं निश्चितम् । अत्रोदाहरणे विपक्षो महाहृद एव । तत्र असत्त्वं साध्यस्य वह्नेरभावो निश्चितः ।

**अवाधितविषयत्वम्**—पक्षे साध्यस्य सत्त्वे बाधाभावत्वमवाधितविषयत्वम् । सत्प्रतिपक्षस्याभावः असत्प्रतिपक्षस्तस्यभाव असत्प्रतिपक्षत्वम् इत्थं पंचरूपोपपन्नैः कारणैः अनुमितिः प्राप्यते ।

**प्रश्नः ९—तद्वान् पक्षः का नाम पक्षता ? तल्लक्षणं च लक्ष्ये संगमनीयम्**

**उत्तरम्**—सिषाधयिषा विरहविशिष्टसिद्ध्यभावः पक्षता। तद्वान् पक्षः तथा चोक्तं मूले—

सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्॥

एवं च सिषाधयिषामात्रं न पक्षता, विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्। अत एव साध्यसन्देहोऽपि न पक्षता विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि सिषाधयिषासत्वेऽनुमितिर्भवत्येव, अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता, यत्र तु सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता, यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्वात् सिषाधयिषा विरहविशिष्ट सिद्ध्यभावरूपपक्षताया असत्त्वेन नानुमितिरितिदिक्।

**प्रश्नः १०**—किं नाम हेत्वाभासत्वम्? हेत्वाभासाः कति? के, च ते? तेषां लक्षणं च किम्? सव्यभिचारस्य असिद्धस्य च भेदान् प्रदर्श्य तेषां लक्षणानि सोदाहरणानि प्रदर्श्यन्ताम्।

**उत्तरम्**—यद्विषयकत्वेन ज्ञानस्यानुमिति विरोधित्वं तत्त्वम्—इति हेत्वाभासस्य लक्षणम्। हेतोराभासा हेत्वाभासा इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोष परत्वमभिप्रेत्य हेतुदोषलक्षणमुक्तम्। तत्र पंच हेत्वाभासास्ते यथा—

१—अनैकान्तर (सव्यभिचारः), २—विरुद्धः ३—असिद्धः ४—प्रतिपक्षितः [ संत्प्रतिपक्षः ] ५—कालात्ययापदिष्टः [ बाधितः ] इति पंच हेत्वाभासाः। तत्र १—साधारणाद्यन्यतमत्वमनैकान्तिकत्वम्। सव्यभिचारत्वम्। २—साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वम्। ३—आश्रयासिद्धाद्यन्यतमत्वम् असिद्धत्वम्। ४—साध्याभाववव्याप्यवत्पक्षकत्वं सत्प्रतिपक्षितत्वम्। ५—साध्याभाववत्पक्षकत्वं बाधितत्वम्।

तत्र—साधारणासाधारणानुपसंहारिभेदान् सव्यभिचारस्त्रिविधः। तत्र साधारणत्वं साध्यवदन्यवृत्तित्वम्। यथा—धूमवान् वह्ने रित्यत्र हेतुः साधारणः।

साध्यासमानाधिकरणो हेतुरसाधारणः यथा—शब्दो नित्यः शब्दत्वात्। इत्यत्र शब्दत्वं हेतुः सर्वेभ्यो नित्येभ्यः अनित्येभ्यश्च व्यावृत्तः शब्दमात्रवृत्तिरिति तस्य असाधारणत्वम्। अनुपसंहारी—अत्यन्ताभावाप्रतियोगिसाध्यकादिः। यथा—सर्वमनित्यं प्रमेयत्वात्। अत्र सर्वस्यैव पक्षत्वात् अन्वयव्यतिरेकदृष्टान्ताभावात् अनुपसंहारित्वम्।

एवमेवासिद्धोऽपि त्रिविधः १—आश्रयासिद्धः २—स्वरूपासिद्धः, ३—व्याप्यत्वासिद्धश्चेति। तत्र पक्षासिद्धत्वम् आश्रयासिद्धत्वं यथा—गगनारविन्दं सुरभि, अरविन्दत्वात्। अत्र गगनारविन्दम् आश्रयः सच नास्ति—इति हेतोः आश्रयासिद्धत्वम्। स्वरूपेणैवासिद्धः स्वरूपासिद्धः। यथा—"शब्दो गुणश्चाक्षुषत्वात् रूपवत्" अत्र चाक्षुषत्वं शब्दे नास्ति तस्य श्रावणत्वात् इति तस्य स्वरूपासिद्धत्वम्। सोपाधिको हेतुर्व्याप्यत्वासिद्धः। यथा—"धूमवान् वह्नेः" इत्यत्र हेतुभूतो वह्निः सोपाधिकत्वम् व्याप्यत्वासिद्धः। अत्रोपाधिः आर्द्रेन्धनसंयोगः। इति दिक्।

इत्यनुमानखण्डम्

## उपमान–खण्डम्

**प्रश्नः ११**—उपमानस्य किं लक्षणम् ? तस्य स्वरूपञ्च किम् ? कथं कुत्र चोपमानात् शक्तिग्रहः ? तत्र को व्यापारः ? करणञ्च किम् ? उपमानस्य प्रमाणान्तरत्वे का युक्तिः ?

**उत्तरम्**—उपमितिकरणमुपमानम्, इत्युपमानस्य लक्षणम् । "अयं गोसदृशः" इति तस्य स्वरूपम् ।

**कथं कुत्र चोपमानात् शक्तिग्रहः ?** कस्यचिद्वनवासिनो मुखात् गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यं श्रुत्वा तदर्थञ्चावगम्य कश्चित् ग्रामीणोः वनं गतो गव्यं पश्यन् प्रथमम् 'अयं गोसदृशः इति साक्षात्करोति तदुत्तरम् "गोसदृशो गवयपदवाच्यः" इत्यतिदेशवाक्यार्थं स्मरति ततः 'गवयो गवयपदवाच्यः' इत्यनुमिनोतीत्येवं प्रकारेण उपमानात् गवये गवयपदशक्तिग्रहः ।

**तत्र को व्यापारः ?** अरण्यादौ गो-सादृश्य दर्शनानन्तरं 'गोसदृशो गवय-पदवाच्यः' इत्यतिदेशवाक्यार्थस्मरणं व्यापारः ।

**उपमितौ करणम्**—उपमितौ सादृश्यज्ञानं करणम् ।

**उपमानस्य प्रमाणान्तरत्वे युक्ति :**—ननु नोपमानं प्रमाणान्तरं प्रत्यक्षा-दिप्रमितिजातीयप्रमितिकरणत्वाभावात् उपमितेः प्रत्यक्षादिविजातीयत्वे माना-भावादिति चेन्न, चक्षुरादिव्यापारविगमेऽप्युमितेरुपादेयतया तस्याश्चाक्षुषत्वा सम्भवः मानसोत्तरमनुत्पद्यमानाया उपमिनोमीति प्रतीतेर्विषयत्वान्न मानसत्वम् ।

अत एव उपमित्यनन्तरं साक्षात्करोमीत्यनुव्यवसायाभावः, उपमिनोमीति अनुव्यवसायश्च । एतेनाप्युपमितेः प्रत्यक्षत्वायोगः । व्याप्तिज्ञानमन्तराप्युदयान्ना-नुमितित्वम् । नापि शब्दत्वम्, पदज्ञानाजन्यत्वात् । नापिस्मृतित्वम्, अननुभूता-र्थस्य स्मरणायोगादिति उपमितेः प्रमित्यन्तरत्वेन तत्करणतयोपमानस्य प्रमाणा-न्तरत्वं सम्भवतीति दिक् ।

**प्रश्नः ? १२**—उपमितिः का ? तस्याः स्वरूपं च किम् ? स० कति विधा ?

उत्तरम्—गोसदृशो गवयपदवाच्य.' इत्यतिदेशवाक्यार्थस्मरणानन्त 'गवयो गवयपदवाच्यः' इति ज्ञानं यज्जायते तदुपमितिः। तस्याः स्वरूपः 'गवयो गवयपदवाच्यः' इत्येव। अत एव उपमाबोध्यः प्रमाणविशेष उपमितिः

सा च उपमितिः साधर्म्योपमिति-वैधर्म्योपमिति भेदात् द्विविधा। तत्र प्रथम साधर्म्यविशिष्टपिण्डप्रत्यक्षजन्या, या गवयपदवाच्यताग्रहरीत्योपपादिता द्वितीया च वैधर्म्यविशिष्टपिण्डप्रत्यक्षजन्या, यथा—कश्चित् कस्यचिन्मुखात 'जलादिवैधर्म्यवती पृथिवीपदवाच्या' इत्यतिदेशवाक्यं श्रुत्वा तदर्थञ्च ज्ञात्व कदाचित् पृथिवीं पश्यन् प्राक् 'इयं जलादिवैधर्म्यवती' इति साक्षात्करोति तदुत्त 'जलादिवैधर्म्यवती पृथिवीपदवाच्या' इत्यतिदेशवाक्यार्थं स्मरति ततः 'पृथिवं पृथिवीपदवाच्या' इत्युपमिनोतीति दिक्।

इत्युपमानखण्डम्

## शब्दखण्डम्

**प्रश्नः १३**—शाब्दी प्रमा का ? शाब्दबोधस्य किं लक्षणम् ? तत्र करणं किम् ? व्यापारः कः ? पदज्ञानोपेक्षया ज्ञायमानपदमेव शाब्दबोधे करणं कुतो न ?

**उत्तरम्**—प्रत्यक्षानुमित्युपमिति शब्दभेदात् प्रमा=अनुभूतिः चतुर्विधा। तत्र प्रमायाश्चतुर्थी विधा शाब्दी प्रमा। सैव चतुर्थी विधा शाब्दी प्रमा शाब्दी अनुभूतिः शाब्दबोधश्च कथ्यते।

**शाब्दबोधस्यलक्षणम्** पदज्ञानकरणकज्ञानत्वं शाब्दबोधस्य लक्षणम्। तत्र शाब्दबोधे पदज्ञानं मनो वा करणम्। पदार्थज्ञानं व्यापारः।

ननु पदज्ञानापेक्षया ज्ञायमानपदमेव शाब्दबोधे करणं कुतो नेति चेन्न, ज्ञायमानपदस्य करणत्वाङ्गीकारे सति मौनिश्लोकादौ शब्दोच्चारणाभावेन ज्ञायमानपदाभावात् शाब्दबोधस्यानुपपत्तेः, पदज्ञानस्य करणत्वे तु यत्र मौनिपुरुषेण श्लोकादिर्लिखितस्तत्रापि लिप्या पदज्ञानेन शाब्दबोधो भवति, ज्ञायमानपदस्य करणत्वाङ्गीकारे तु मौनिश्लोकादौ शब्दोच्चारणाभावेन पदाभावात् शाब्दबोधाऽनुपपत्तेः। अतः शाब्दबोधं प्रति पदज्ञानेमेव करणं न तु ज्ञायमानं पदं करणमितिदिक्।

**प्रश्नः १४**—शाब्दबोधस्यात्मनिष्ठत्वात् पदस्याकाशनिष्ठत्वात् कथं कार्यकारणभावः ?

**उत्तरम्**—ननु शाब्दबोधस्यात्मनिष्ठत्वात् पदस्याकाशनिष्ठत्वात् तयोः कथं कार्यकारणभाव इति चेन्न, समवायेन शाब्दबोध-पदयोर्वैयधिकरण्येऽपि कालिकेन सामानाधिकरण्यात् तयोः कार्यकारणभावस्य सम्भवात्। इति दिक्।

**प्रश्नः १५**—का नाम वृत्तिः ? तस्याः किं लक्षणम् ? सा कति विधा ? कथञ्च शक्तिज्ञानस्य सहकारितेति विविच्यताम् ?

उत्तरम्—शक्तिलक्षणान्यतरः सम्बन्धो वृत्तिः। पदजन्यपदार्थोपस्थितावेव शक्तिज्ञानस्योपयोगः। यतो हि शक्तिग्रहाभावे पदज्ञानेऽपि शक्तिसम्बन्धेन लक्षणारूपसम्बन्धेन वा स्मरणानुपपत्तेः। पदज्ञानस्य च 'एकसम्बन्धिज्ञानपर सम्बन्धि स्मारकमिति' न्यायेन अर्थस्मारकत्वम्।

सा च वृत्तिः शक्तिलक्षणाभेदात् द्विविधा।

ननु 'एक सम्बन्धिज्ञानमपरसम्बन्धि स्मारकमि' ति न्यायेन पदज्ञानादर्थोपस्थित्या शाब्दबोधसम्भवात् कथं शक्तिज्ञानस्य सहकारितेति चेन्न, "हस्ति-हस्तिपकयोः सम्बन्धाज्ञाने हस्तिपकदर्शनेऽपि हस्तिनोऽस्मरणान्न सम्बन्धज्ञानमन्तरैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति पद-पदार्थयोः शक्तिरूपसम्बन्धज्ञाने सत्येव पदज्ञानात्पदार्थस्मरणं, नतु पदज्ञानमात्रेणेति शक्तिज्ञानस्य पद ज्ञानसहकारिताया आवश्यकत्वात्। न च शक्तिज्ञानस्य इव लक्षणाज्ञानस्यापि पदज्ञानसहकारित्वात् कथं ग्रन्थकृता 'शक्तिधीः अहकारिणी' इतिमूलोक्त्या शक्तिधिय एव तत्सहकारित्वमुक्तमिति वाच्यम्, शक्तिज्ञानाभावे शक्यसम्बन्धरूपलक्षणाग्रहस्याप्यसम्बन्धेन पदपदार्थयोः सम्बन्धज्ञानाभावात् पदज्ञाने सत्यपि पदार्थ स्मरणं न सम्भवतीत्यभिप्रायेणैव ग्रन्थकारेण शक्तिज्ञानसहकारिंताया उक्तत्वादिति दिक्।

प्रश्नः १६—प्राचीन-नवीनमताभ्यां शक्तिपदार्थो निरूप्यताम् ?

उत्तरम्—पदेन सह पदार्थस्य सम्बन्धः शक्तिः। स चास्माच्छब्दात् अयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। आधुनिके नाम्नि शक्तिरस्त्येव। 'एकादशेऽहनि पिता नाम कुर्यात्' इतीश्वरेच्छायाः सत्त्वात्। आधुनिकसंकेतिते तु न शक्तिरिति प्राचीनाः।

नव्यास्तु 'ईश्वरेच्छा न शक्तिः किन्त्विच्छैव शक्तिस्तेनाऽधुनिकसंकेतितेऽपि शक्तिरस्त्येवेति दिक्।

प्रश्न १७—शक्तिग्राहकाः सोदाहरणं व्याख्यायन्ताम् ?

अथवा

"शक्तिग्रहं व्याकरणोपमानमि" त्यादि कारिका व्याख्येया।

**उत्तरम्**—'शक्तिग्रहं व्याकरणोपमान कोशाप्तवाक्यात् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।' 'वृद्धा एतेभ्य उपायेभ्यः शक्तिग्रहं स्वीकुर्वन्ति। तथा च शक्तिः=संकेतःतस्य ग्रहणमिति शक्तिग्रहः। व्याकरणोपमानकोशाप्तवाक्यादयः शक्तिग्राहकाः सन्ति।

तत्र व्याकरणाद् यथा—धातु-प्रकृति-प्रत्ययादीनां शक्तिग्रहो व्याकरणात् भवति यथा—भू सत्तायाम्, वर्त्तमाने लट् इत्यादि व्याकरणात्।

**उपमानात् शक्तिग्रहो यथा**—गोसदृशो गवय इत्यत्र गवय पदस्य 'गवयो गवयपदवाच्य' इति गवये शक्तिग्रह उपमानात्।

**कोशात् शक्तिग्रहो यथा**—'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः' इत्यादीनां देवताद्यर्थे शक्तिग्रहकोषात्। सति बाधके क्वचित्त्यज्यते।

यथा नीलादिपदानां नीलरूपादौ नीलविशिष्टे च शक्तिः कोशेन व्युत्पादिता, तथापि लाघवात् नीलादावेव शक्तिः, नीलादि विशिष्टे तु लक्षणा।

**आप्तवाक्यात् शक्तिग्रहो यथा**—कोकिलः पिकशब्दवाच्यः इत्यादि शब्दात् पिकादिशब्दानां कोकिले शक्तिग्रह आप्तवाक्यात्। व्यवहारतः शक्तिग्रहो यथा—प्रयोजकवृद्धेन 'घटमानय' इत्युक्तम्, तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः, तदव धार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेति शब्द प्रयोज्यमित्य-वधारयति। ततश्च घटं नय' 'गामानय' इत्यादिवाक्यादौ आवापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं व्यवहाराद् गृह्णाति।

**वाक्यशेषात् शक्तिग्रहो यथा**—यवमयश्चरुर्भवती'त्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः, कङ्गौ तु म्लेच्छानाम्। अत्रचरुशब्दयोगे दीर्घशूके एव वाक्यस्यशेषात् शक्तिग्रहः। अथवा—

"वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥

इति वाक्यशेषात् यवपदस्य दीर्घशूकार्थे शक्तिग्रहः।

एवमेव **विवरणात् शक्तिग्रहो यथा**—'विवरणन्तु तत्समानार्थक पदान्तरेण तदर्थकथनम्। यथा—'घटोऽस्ती' त्यस्य 'कलशोऽस्ति' इत्यनेन

विवरणात् घटपदस्य कलशे शक्तिग्रहः। सिद्धपदस्य सान्निध्यात् शक्तिग्रहो यथा—'इह सहकारतरौ मधुरंपिको रौती' त्यादौ पिकशब्दस्य कोकिले शक्तिग्रहः प्रसिद्धपदसान्निध्यात्।

**प्रश्न १८**—वैयाकरणानां मते आख्यातस्य [ तिङन्तस्य ] कुत्र शक्तिः ? किं तत्र नैयायिकानां मतम् ? सर्वमिदं स्पष्टीक्रियताम्।

**उत्तरम्**—वैयाकरणास्तु 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्र-प्रमाणेन आख्यातस्य=तिङन्तस्य कर्त्तरि शक्तिरिति स्वीकुर्वन्ति। ते चैत्रः पचती' त्यादौ चैत्रस्य कर्त्रा सह अभेदान्वयः इति वदन्ति। तथा च पाककर्त्र-भिन्नश्चैत्र इत्यर्थो भवति। तदिदं नैयायिका न स्वीकुर्वन्ति। ते हि लाघवात् कृतौ शक्तिरिति स्वीकुर्वन्ति।

**अयमाशयः**—वैयाकरणानां मतानुसारेण कर्तरि शक्तिस्वीकारे शक्यताव-च्छेदकः कर्तृनिष्ठधर्मविशेषः कृतिरेव स्यात्। सा च प्रतिकर्तृ भिन्नेति शक्यताव-च्छेदकनानात्वप्रसंगाद् गौरवं स्पष्टम्। कृतौ शक्तिस्वीकारे तु शक्यतावच्छेदको धर्मः कृतित्वजातिरेकैवेति परमलाघवम्। शाब्दबोधे तु कृतिश्चैत्रादौ प्रकारी-भूय भासते। तथा च चैत्रः पचतीत्यादौ पाकानुकूलकृतिमांश्चैत्र इति शाब्द-बोधो भवति।

न चैवं कृतौ शक्तिस्वीकारे कर्तुरनुक्तत्वात् कर्तृकरणयोस्तृतीयेति सूत्रबलेन चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्। कर्तृसंख्याभिधानस्य तत्र तन्त्रत्वात्। तथा च कर्तृगतसंख्याया आख्यातेनाबोधने कर्ताऽनभिहितो भवतीति तत्र विवक्षितत्वात्। अत्र च आख्यातस्य कृतौ शक्तिस्वीकारेऽपि तेन कर्तृसंख्या-भिधानात् न कर्तुरनुक्तत्वम्। तथा च न तृतीयापत्तिरितिदिक्।

**प्रश्न १९**—पदानां जातावेव शक्तिरिति मीमांसकमतमुपपाद्य नैयायिकमते कुत्र तेषां शक्तिरित्युपपाद्यताम्।

**उत्तरम्**—पदानां जातिविशिष्टे शक्तिस्वीकारे जातावपि शक्तिग्रहस्याव-श्यकता, "नागृहीतविशेषणा बुद्धिर्विशिष्टेपूपजायते" इति न्यायात्। तथा च जातावेव शक्तिः, लाघवात्। तदुक्तं–विशेष्यं नाभिधागच्छेत् क्षीणशक्ति-

विशेषणे' इति मीमांसकाः। तेषामयमाशयः—यद्यपि अर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, अतो व्यक्तावेव शक्तिग्रहः, 'गामानय' इत्यादिवाक्येन गोव्यक्तेरेवानयनादिदर्शनात्, जातेश्चानयनाद्यसम्भवात्, अप्रयोजकत्वाच्च गोपदस्य सास्नादिविशिष्टगोव्यक्तावेव 'शक्तिग्रहस्वीकारेऽनन्तानां गोव्यक्तीनां युगपदुपस्थित्यसम्भवेनानन्त्यप्रसंगः। एकस्मिन् व्यक्तौ शक्तिग्रहस्वीकारे तदतिरिक्तानां गोव्यक्तीनां भानमेव न स्यादिति व्यभिचारश्च पदार्थोपस्थितौ शक्तिग्रहस्य कारणत्वात्। तस्माज्जातावेव शक्तिः स्वीकरणीया। न च जातौ शक्तिग्रहस्वीकारे व्यक्तेर्भानं शाब्दबोधे न स्यादितिवाच्यम्, व्यक्तिं विना जातिमानस्यासम्भवत्वेन व्यक्तेरपि आक्षेपविधया भानसम्भवात्। तस्माज्जातावेव सर्वत्र शक्तिग्रह इति मीमांसकाः।

नैयायिकमते मीमांसकानां मतं न समीचीनम्, शक्ति विना व्यक्तिमानानुपपत्तेः। प्रवृत्तिनिमित्तयोग्यस्तु व्यक्तिरेव। घटमानयेत्येव घटव्यक्तावेव शक्तिग्रहः, न तु घटजातौ जातेरानयनक्रियासम्बन्धाभावात्। नच व्यक्तेर्लक्षणया बोधसम्भव इति वाच्यम्, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। तस्माद् व्यक्तावेव शक्तिग्रहः स्वीकर्तव्यः, न तु जातौ। न च तथा सति व्यभिचार आनन्त्यं वा शंक्यम्, सकलव्यक्तिषु एकस्या एव शक्तेः स्वीकारात्। न च व्यक्तीनामननुगमः इति वाच्यम्, गोत्वादिजातेरेवानुगमकत्वात्।

किञ्च जातौ शक्तिग्रहे गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्, शक्तिज्ञानस्य हि समानप्रकारकत्वेन पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात्। किञ्च गोत्वे यदि शक्तिः, तदा गोत्वं शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्, तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् महद् गौरवं स्मात्। तस्मात् तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ सिद्ध्यतीति दिक्।

**प्रश्नः** २०—किं नाम पदम्? कति विधं च तदिति सविस्तरं प्रतिपादयत। [ १९८६ ]

**उत्तरम्**—शक्तं पदम् इति पदलक्षणम्। अर्थात् पदार्थेन=बोधकता-सम्बन्धेन शक्तिविशिष्टं पदमिति। पदमिति पदार्थबोधकमेव पदार्थबोधे शक्तमिति शक्तपदस्यार्थः। तथा च पदं चतुर्विधम्—क्वचिद् यौगिकम् क्वचिद्-रूढम्, क्वचिद् योगरूढम्, क्वचिद् यौगिकरूढम् च।

**तथाहि** [१] यत्रावयवार्थं एव बुद्धयते तद् यौगिकम्। यथा—पाचकादिपदम्। [२] यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुद्धयते तद्रूढम्। यथा—गो-मण्डलादिपदम्। यत्तु गम् धातोर्डोप्रत्ययेन निष्पन्ने सति गोपदे कथं रूढमिति चेत् तदर्थस्तु गमनक्रियाकर्तरि, एव साधु न तु गोपदार्थ-विशेषे। व्यवहारे तु गोपदेन कुत्रापि अवयवशक्तिमत्वं न लक्ष्यते; अतएव रूढमेव गोपदम्। एवमेव मण्डलादयोऽपि बोध्याः।

[३] यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् यथा—**पंकजादिपदम्**। **तथाहि**—पङ्कजपदमवयवशक्त्या पंकजनिकर्तृत्व-रूपमर्थम् बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति नच केवलयाऽवयवशक्त्या पंकजपदस्य कुमुदे प्रयोगः स्यादिति वाच्यम्। रूढि-ज्ञानस्य केवलयौगिककार्थज्ञाने प्रतिबन्धकत्वादिति प्राचीनाः। नव्य ृ समुदायशक्त्युपस्थितपद्मेऽवयवार्थस्य पंकजनिकर्तुरन्वयो भवति, सान्निध्यात्। रूढ्यर्थस्य बाधप्रतिसन्धाने तु लक्षणया कुमुदादेर्बोधः। कुमुदत्वेन बोधे तात्पर्याभावे पद्मत्वस्य च बाधेऽवयवशक्तिमात्रेणापि निर्वाह इत्याहुः। अवयवार्थबाधस्थले समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि च स्थल-पंकजं विजातीयमेव तदा लक्षणयैव तत्र पंकजशब्दप्रयोगो भवति।

[४] यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद् यौगिकरूढम्। यथा—उद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुद्धयते। समुदायशक्त्या च 'उद्भिदा यजेत पशुकाम' इत्यादौ च उद्भिन्नामकं यागविशेषं-बोधयतीति दिक्।

**प्रश्न २१**—लक्षणायाः स्वरूपम् किम्? तस्याः बीजं च किम्? तस्या भेदाः कति? कानि च तेषां स्वरूपाणि सोदाहरणानीति प्रतिपाद्यताम्?

**उत्तरम्**––लक्षणा शक्यसम्बन्धः, इति लक्षणायाः स्वरूपम् । तात्पर्या-ऽनुपपत्तिस्तस्या बीजम् । सा चेयं लक्षणा क्वचित् जहत्स्वार्था क्वचिद् अजहत्स्वार्था चेति द्विविधा । तत्र जहत्स्वार्था यथा–– गंगायां घोषः इत्यादौ गंगापदस्य शक्यार्थे=जलप्रवाहरूपे 'घोषस्याऽनुपपत्तिस्तात्पर्यानुपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः । अत्र गंगापदं स्वार्थम् सर्वथा जहातीति जहत्स्वार्थेयं लक्षणा शक्यसम्बन्धरूपा । तथा हि––प्रवाहरूपशक्यार्थ-सम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं ततः शाब्दबोधः ।

परन्तु यदि अन्वयानुपपत्तिर्लक्षणायाः बीजं स्यात् तदा 'यष्टी प्रवेशय' इत्यादौ लक्षणा न स्यात् यष्टिषु प्रवेशान्वयस्याऽनुपपत्तेरभावात् । अतः तत्प्रवेशे भोजनःतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा । एवं च 'काकेभ्यो दधि-रक्ष्यताम्' इत्यादौ काकपदस्य दध्युपघातके लक्षणा, सर्वतो दधिरक्षायास्तात्प-र्यविषयत्वात् । अन्यथाऽत्र लक्षणा न स्यात् । अन्वयानुपपत्तेरभावात् । एवमेव छत्रिणो यान्तीत्यादौ छत्रिपदस्य एकसार्थवाहित्वविशिष्टे लक्षणा इयमेव अजहत्स्वार्था लक्षणा कथ्यते । एकसार्थवाहित्वेन रूपेण छत्रि-तदन्ययोर्बोधात् ।

यदि च अन्वयानुपपत्तिरेव लक्षणायाबीजं स्यात्, तदा क्वचित् गंगा पदस्य तीरे क्वचित् घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् ।

तात्पर्यानुपपत्तेर्लक्षणाया बीजत्वे तु 'यष्टी प्रवेशय' इत्यादौ यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिपदस्य यष्टिधरे लक्षणोपपद्यते । 'गंगायां घोषः इत्यादौ च गंगापदस्य तीरतात्पर्यग्रहस्थले तीरे घोषपदस्य च मत्स्यादितात्पर्य-ज्ञानस्थले मत्स्यादौ लक्षणेति व्यवस्थोपपद्यते ।

यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणा यथा–– द्विरेफादिपदाद्रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा । इति दिक् ।

**प्रश्नः २२**––'लाक्षणिकं पदं नानुभावकमि' ति वाक्यस्य तात्पर्य-मुपपाद्य निरस्यताम् ।

**उत्तरम्**––शक्तपदज्ञानं शक्यार्थस्य स्मारकं शाब्दानुभवजनकं च,

लाक्षणिक पदज्ञानन्तु लक्ष्यार्थस्य स्मारकमेव, न तु शाब्दानुभवजनकम्। न चैवं शाब्दबोधे लक्ष्यार्थस्य भानं कथमुपपद्येतेति वाच्यम्। शक्यलक्ष्यान्यतर-पदार्थान्विततच्छक्यार्थशाब्दबोधं प्रति तच्छक्तपदज्ञानस्य हेतुतया शाब्दबोधे-तच्छक्यार्थान्वयिनो लाक्षणिकार्थस्य लक्षकपदसमभिव्याहृततच्छक्तपदज्ञानेनैव भानस्योपपत्तेरिति तात्पर्येणैव प्राच्या वदन्ति 'लाक्षणिकं पदं नानुभावकमि'ति। नव्यानां मते तन्न समीचीनम्, तथा सति 'कुमतिपशुरि' त्यादित' सर्वलाक्षणिक-स्थलेऽनुभवसिद्धस्य शाब्दबोधस्यानुपपत्तेः। तथाहि—— कुत्सिता मतिर्यस्य स कुमतिरिति बोधः। उत्तरपदस्य कुत्सितज्ञानवल्लाक्षणिकतया पूर्वपदस्य तात्पर्यग्राहकतयानिरर्थकतया कुत्सितज्ञानवति पशुत्वस्य बाधितत्वेन पशु-पदस्यापि पशुसदृशलाक्षणिकतया कुमतिः पशुरित्यत्र कस्यापि शक्तपदस्या-भावात् तत्रशाब्दबोधो न स्यादिति शाब्दबोधोपपत्तये लाक्षणिकपदेऽप्यानु-भाविकी शक्तिरवश्यमत्रकार्येति दिक्।

**प्रश्नः २३**——'गभीरायां नद्यां घोषः' इत्यत्र कस्य कस्मिंश्च लक्षणेति विषये मीमांसकमतं निरस्य नैयायिकमतं प्रतिपाद्यताम्।

**उत्तरम्**——मीमांसकानां मते स्वबोध्यसम्बन्ध एव लक्षणा, न तु शक्य-सम्बन्धो लक्षणा। एवञ्च गंगायां घोष इत्यादौ गंगापदबोध्यप्रवाहसम्बन्धस्य तीरे सत्त्वाद् गंगापदस्य तीरे लक्षणा, 'गभीरायां नद्यां 'घोषः' इत्यत्र तु गभीरायां नद्यामितिवाक्यबोध्य गभीराभिन्ननदी सम्बन्धस्य तीरे सत्त्वा-त्तादृशवाक्यस्य तादृशनदीतीरे लक्षणेति।

तन्न समीचीनम्, स्वबोध्यत्वस्य हि स्वजन्यशाब्दबोधविषयत्वरूपत्वे 'गंगायां घोषः' इत्यत्र गंगापदस्य तीरे लक्षणा नोपपद्येत, अत्र गंगापदेन प्रवाहशाब्दबोधाजननात् प्रवाहस्य गंगापदबोध्यत्वाभावदिति शक्त्या स्वजन्य-स्मृतिविषयत्वं स्वबोध्यत्वं वाच्यम्, एवञ्च शक्त्यभावान्न वाक्यस्य लक्षकत्वं, नच शक्यसम्बन्धापेक्षया गुरोः स्वबोध्यसम्बन्धस्य लक्षणात्वम्। किञ्च तत्र गभीरनदीतीरे गभीराया नदीतिसप्तमीशून्यभागस्य लक्षणा वा गभीरायां नद्यामिति सप्तम्यन्तस्य ? तत्र नाद्यः, तथा सति सप्तम्यर्थाधेयत्वे तादृशतीरस्यान्व-

यानुपपत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् गभीरायां नदीतिभागस्य च सप्तमीप्रकृतित्वाभावात्। न द्वितीयः तथा सति नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वादाधेयतासम्बन्धेन तादृशतीरस्य घोषेऽन्वयाभावसम्भवात्।

नैयायिकानां मते तु शक्यसम्बन्धस्य लक्षणात्वेन वाक्यस्य न लक्षकता; तस्य शक्याप्रसिद्धेः। तथा च 'गभीरायां नद्यां घोषः' इत्यत्र नदीपदस्य नदीतीरे लक्षणा; गभीरपदार्थस्य च नद्यासहाभेदान्वयः; 'चैत्रस्य गुरुकुलमि' त्यादावेकदेशान्वयस्य स्वीकृतत्वात्। यदि च अत्र एकदेशान्वयो नाभ्युपगम्यते, तर्हि नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरपदं च तात्पर्यग्राहकमिति दिक्।

**प्रश्नः २४**—चित्रगुरित्यादिबहुव्रीहौ, राजपुरुष इत्यादितत्पुरुषे च कस्य कुत्र कुतश्च लक्षणेति निरूप्यताम्।

**उत्तरम्**—'चित्रगुरि'त्यत्र एकदेशान्वयस्वीकारेण गोपदस्य गोस्वामिनि लक्षणा, गोपदार्थे च चित्रपदादेवाभेदान्वयः, तथा च चित्राऽभिन्नाया गोस्वामिनि शाब्दबोधः। यदि तु एकदेशान्वयो न स्वीक्रियते, तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकम्। एवमेव आरूढवानरो वृक्ष इत्यत्र वानरपदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकमिति।

तत्पुरुषे तु "राजपुरुषः" इत्यादौ राजपदार्थेन पुरुषपदार्थस्य साक्षान्नान्वयः, तथा सति राजाऽभिन्नः पुरुष इत्यर्थं स्यात्। 'निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। न चात्र राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम, अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्मात् राजपदादौ राजसम्बन्धिनी लक्षणा, तस्य च पुरुषेण सह अभेदान्वय इति दिक्।

**प्रश्नः २५**—तत्पुरुषसमासेन समस्तपदे कथं लक्षणाया अनुवृत्तिः ?

**उत्तम्**—तत्पुरुषे तु पूर्वपदे लक्षणा। 'राज्ञः पुरुषः राजपुरुषः' इत्यत्र राजपदार्थेन पुरुषपदार्थस्य साक्षान्नाऽन्वयः, निपातातिरिक्तनामर्थयोर्भेदेनाऽन्वय-

२

बोधस्याऽव्युत्पन्नत्वात् । एवं च राजविशिष्टः पुरूषः इति शाब्दबोधापत्तिः, न तु स्वत्वसंम्बन्धेन राजाभिन्नः पुरुषः इति शाब्दबोधः ।

वैयाकरणास्तु राजपुरुष इत्यत्र लक्षणा नाङ्गीकुर्वन्ति । वैयाकरणानां मतेन-लुप्तषष्ठीस्मरणात् विभक्त्यर्थे स्वत्वे राजपदार्थस्यानिरूपितसम्वन्धेनान्वयः । तथा च सत्त्वेनानिरूपितसम्वन्धेन पुरुषपदार्थेऽन्वयं कृत्वा 'राजनिरूपितस्वत्ववान् पुरुषः' इत्याकारक; शाब्दबोधः इति ।

नैयायिकास्तु गौरवात् तन्न स्वीकुर्वन्ति । राजपदार्थस्य लक्षणया राज-सम्बन्धी इत्यभेदसम्बन्धेनान्वयं कृत्वा राजसम्बन्ध्यभिन्नः पुरुषः इत्याकारक-शाब्द बोध एव युक्तम् । निपातातिरिक्तपदेन नामार्थानां भेदसम्बन्धेनान्वयः । तथा च 'घटः पटो न' इत्यत्र पटं प्रति योगितारूपभेदसम्बन्धेन नञर्थभेदेऽन्वयः सन् स्वरूपात्मकभेदसम्बन्धेन घटे पटं प्रति योगिताकभेदवान् घटः इत्याकारक-शाब्दबोधासम्भवः । भेदपदेन तु निपातातिरिक्तनामार्थद्वयस्यान्वयबोधः । तथा च भेदपदेनैव नीलो घटः इत्यत्र नीलघटपदार्थयोरन्वयबोधः—सम्भवः ।

'राजपुरुषः' इत्यादिस्थले लुप्तषष्ठीविभक्तिस्वीकारेण राजनिरूपितस्वत्व-वान् पुरुषः, इत्याकारकः शाब्दबोधो न युक्तः, लुप्तषष्ठी विभक्तिस्मरणाभावेऽपि राजपुरुष इत्यनेनार्थबोधः स्यादेव

यद्यपि तत्पुरुष-समासे पूर्वपदेन स्वार्थविशेषितविग्रहवाक्यस्य विभक्त्यर्थे स्वत्वविशिष्टे निरूढलक्षणोपगमद्वारा तत्तद्विभक्तिस्मरणाभावे पूर्वपदस्य तदर्थे निरूढा लक्षणा न सम्भवः । लक्षणारूपवृत्तिज्ञानाभावेन पदपदार्थो-पस्थितिरसम्भवा तेन शाब्दबोधाभावः । तथापि विभक्तिस्मरणं विना निरूढ लक्षणार्थनिर्णयाभावेऽपि सामान्यतया लक्षणाज्ञानं तदधीनपदार्थोपस्थिरपि सम्भवा । निरूढलक्षणाज्ञानेनैव पदार्थस्मृति र्न समीचीना ।

अत एव 'राजपुरुषः' इत्यादौ विभक्तिस्मरणरूप-गौरवं विहाय राजपदे राजसम्बन्धरूपार्थे लक्षणा । तेन पुरुषस्य अभेदसम्बन्ध एव समीचीनः । तथा 'राजसम्बन्ध्यभिन्नः पुरुषः' इत्याकारकः शाब्दबोध एव लक्ष्यते । इतिदिक् ।

**प्रश्नः २६—कस्मिन् कस्मिन् समासे लक्षणेति विशदं निरूपयत ।**

उत्तरम्---बहुव्रीहौ, तत्पुरुषे, द्वन्द्वे, एकशेषे, अव्ययीभावे च लक्षणा।

( १ ) बहुव्रीहौ यथा---चित्रा गावो यस्य स "चित्रगु:" इत्यादौ एकदेशान्वयस्वीकारे तु गोपदस्य गोस्वामिनि लक्षणा; गोपदार्थे च चित्रपदादेवास्याऽभेदान्वयः। चित्राऽभिन्नाया गो: स्वामिनि शाब्दबोधः। यदि च एकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगो: स्वामिनि लक्षणा चित्रपदं तात्पर्यं ग्राहकम्।

( २ ) तत्पुरुषे यथा---"राजपुरुष:" इत्यादौ राजपदार्थस्य पुरुषपदार्थेन सह साक्षादन्वयस्तु न संगच्छते। तथा सति राजाऽभिन्नः पुरुष इत्यर्थः स्यात् "निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधोऽव्युत्पन्नः" इतिनियमात्। नचात्र राज पुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम्, अस्मृतविभक्तेरपिततो बोधोदयात्। ततः राजपदस्य राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण सहाभेदान्वयः।

[ ३ ] द्वन्द्वे यथा---धवखदिरौ' इत्यत्र धवः खदिरश्च विभक्त्यर्थद्वित्व प्रकारेण बुध्येते इति न तत्र लक्षणा। नचात्र धवखदिरसाहित्ये लक्षणेति वाच्यम्। साहित्यशून्ययोरपि द्वन्द्वदर्शनात्।

ननु एकक्रियान्वितत्वं साहित्यं तच्चात्राप्यस्ति, एतदेव प्रकृतेऽभिमतमिति चेन्न "धवखदिरौ पश्य छिन्धि" धवं पश्य, खदिरं छिन्धि इत्यादिक्रियाभेदेऽपि द्वन्द्वदर्शनात्, साहित्यस्यानुभवाच्च।

[ ४ ] एकशेषे यथा—"पितरौ, श्वशुरौ" इत्यादौ पितृपदस्य जनकदम्पत्योर्लक्षणा। श्वशुरपदस्य च पत्नीजनक-दम्पत्योर्लक्षणा।

[ ५ ] अव्ययीभावे यथा—उपकुम्भम् इत्यादौ परपदस्य = कुम्भादेः कुम्भादिसम्बन्धिनि लक्षणा, पूर्वपदं तात्पर्यग्राहकम्। इत्थं च समासे पदशक्त्यैव निर्वाहः, न क्वापि शक्तिरिति दिक्।

प्रश्नः २७---शाब्दबोधे कानि कारणानि? तानि सोदाहरणंव्याख्यायन्ताम्।

उत्तरम्---शाब्दबोधे चत्वारि कारणानि सन्ति। तानि यथा—

१–आसक्तिः २–योग्यता ३–आकांक्षा ४—तात्पर्यज्ञानञ्च । एवं आसक्तिज्ञानम्, योग्यताज्ञानम्, आकांक्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम् ।

[ १ ] **आसक्तिः**—यत्पदार्थस्य येन पदार्थेनाऽन्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः आसक्तिः शाब्दबोधेकारणम् । तेन गिरि भुंक्त मग्नि-'मान् देवदत्तेन' इत्यत्र न शाब्दबोधः । 'गिरिरग्निमान् भुक्तं, देवदत्तेन' इत्यन्वयोऽपेक्षितः । अत्रापेक्षितान्वयानामव्यवधानेनोपस्थितिर्नास्ति, पदार्थान्तरैर्व्यवहितत्वात् ।

[ २ ] **योग्यता**—एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता । योग्यताज्ञानमपि शाब्दबोधे कारणम् । योग्यताऽभावान्न वह्निना सिञ्चतीत्यादौ शाब्दबोधः । सिञ्चनक्रियायां वह्निकरणकत्वसम्बन्धस्य सम्भवो नास्ति । नव्यास्तु योग्यताज्ञानं न शाब्दबोधे कारणम्, किन्तु 'वह्निना सिञ्चती' त्यादौ सेके वह्निकरणत्वाभाव रूपायोग्यता निश्चयेन प्रति बन्धान्न शाब्दबोध इत्याहुः ।

[ ३ ] **आकांक्षा**—येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्य आकांक्षा । यथा–क्रियापदं विना कारकपदं नान्वयबोधं जनयति तस्मात्तेन तस्याकांक्षा । आकांक्षाऽभावान्न 'गौरश्वः पुरुषो हस्ती' त्यादौ शाब्दबोधः । वस्तुतस्तु क्रियाकारकपदानां संनिधानमसत्त्या चरितार्थम् । परन्तु घटगतकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकांक्षाज्ञानं कारणम्, तेन घटकर्मत्वम् आनयनं कृतिरित्यादौ न शाब्दबोधः ।

[ ४ ] **तात्पर्यज्ञानम्**—वक्तुरिच्छा तात्पर्यम् । तज्ज्ञानं चापि शाब्दबोधे कारणम् । तात्पर्यज्ञानाभावात "सैन्धवमानय" इत्यत्र क्वचिदश्वस्य क्वचिल्लवणज्ञानं न स्यात् । तात्पर्यमिदं प्रकरणादिना गृह्यते । न च तात्पर्य ग्राहकप्रकरणादीनां शाब्दबोधे कारणमस्त्विति वाच्यम् तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु ।

इत्थं च वेदस्थले तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम्, सर्गादावध्यापकाभावात् ।

नच प्रलय एव नास्ति, कुतः सर्गादिरिति वाच्यम्, प्रलयस्यागमेषु प्रतिपादितत्वात् । इत्थंच शुकवाक्येऽपि ईश्वरीयतात्पर्यज्ञानं कारणम् । तथा च शुकवा

तात्पर्यज्ञानं विनैव शाब्दबोधः वेदे त्वनादिमीमांसापरिशोधिततर्कैरर्थावधारणमिति दिक् ।

**प्रश्नः २८**—तत्पुरुषसमासेन समस्तपदे कथं लक्षणायाअनुवृत्तिरिति प्रतिपादयत ।

अथवा

राजपुरुष इत्यत्र लक्षणां संघटयत ।

**उत्तरम्**—तत्पुरुषे सु पूर्वपदे लक्षणा । "राज्ञः पुरुषः" इत्यादौ राजपदार्थेन पुरुषपदार्थस्य साक्षान्नान्वयः, निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् । अन्यथा राजा पुरुषः इत्यत्रापि तथान्वयबोधः स्यात् । तेन राजविशिष्टः पुरुषः इति शाब्दबोधापत्तिः, न तु स्वत्व सम्बन्धेन राजाभिन्नः पुरुष इति शाब्दबोधः ।

वैयाकरणास्तु 'राजपुरुषः' इत्यादौ लक्षणा नाङ्गीकुर्वन्ति । तेषां मतेन लुप्तषष्ठी स्मरणात् विभक्त्यर्थे स्वत्वे राजपदार्थस्यानिरूपितसम्बन्धेनान्वयः । तथा च स्वत्वेन नानिरूपितसम्बन्धेन पुरुषपदार्थे अन्वयं विधाय राजनिरूपितस्वत्ववान् पुरुषः इत्याकारकः शाब्दबोधः स्यात् ।

नैयायिकास्तु गौरवात् तन्न स्वीकुर्वन्ति । राजपदार्थस्य लक्षणया राजसम्बन्धी इत्यभेदसम्बन्धेनान्वयं विधाय राजसम्बन्ध्यभिन्नः पुरुषः इत्याकारकः शाब्दबोध एव समीचीनः । निपातातिरिक्त पदेन नामार्थानां भेदसम्बन्धेनान्वयः स्यात् । एवं 'घटःपटो न' इत्यादौ पटप्रतियोगितारूपं भेदसम्बन्धेन नजर्थभेदेऽन्वयः सन् स्वरूपात्मकभेदसम्बन्धेन घटे पटप्रतियोगिकभेदवान् घटः इत्याकारकः शाब्दबोधासम्भवः । भेदपदेन तु निपातातिरिक्तनामर्थद्वयस्यान्वयबोधः स्यात् । तथा च भेदपदेनैव तु 'नीलो घटः' इत्यत्र नीलघटपदार्थयोः अन्वयबोधः । न च राजपुरुष इत्यादौ लुप्तषष्ठी विभक्तेः स्मरणं कल्पनीयमिति वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयात् । तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण सह अभेदान्वयः । इति दिक् ।

प्रश्नः २९—समस्तपदानामर्थबोधे लक्षणायाः कुत्र स्थितिरिति सदृष्टान्तं निरूपयत।

उत्तरम्—बहुव्रीहौ नैयायिकाः पदार्थबोधे लक्षणाया अनिवार्यत्वं कथयन्ति। तत्र वैयाकरणास्तु अभिधया एव शाब्दबोधं स्वीकुर्वन्ति। नैयायिकानां मते तु तन्न युक्तम्।

यथा बहुव्रीहिसमासे चित्रगुरित्यादौ यदेकदेशान्वयस्तत्र चित्रा गावो यस्य स इतिविग्रहे गोपदस्य गो स्वामिनि लक्षणा स्वीकर्तव्या। ततश्च चित्रपदेनात्रान्वयः। तेनैकपदेन लक्षणा तद्भिन्नपदेन च लक्ष्यार्थस्यान्वयः स्वीकार्यः। तेन चित्राणां गवां स्वामीति विग्रहे, अथ च चित्रा गौ यस्य स इति विग्रहे गोपदेन गोस्वामिरूपेऽर्थे लक्षणा स्वीक्रियते। तत्पुरुषसमासे तु—राजपुरुष इत्यादौ वैयाकरणा लुप्तषष्ठी विभक्तेः स्मरणमिति स्वीकुर्वन्ति तन्न समीचीनम्। तत्र पूर्वपदे लक्षणां विधाय पर्यवसितोऽर्थः राजसम्बन्ध्यभिन्नः पुरुष इति। तथा च राज्ञाभेदा॑गदेनान्वितः पुरुष इति राजपुरुषः। यथा बहुव्रीहौ उत्तरपदे तथाऽत्र पूर्वपदे लक्षणा बोद्धव्या।

इतरेतरद्वन्द्वे तु उभावेव पदार्थौ स्वरूपेणोक्तौ, अत एवात्र ,धवखदिरौ' इत्यादौ न लक्षणा। विग्रहस्तु धवश्च खदिरश्च इत्येव समीचीनः, न तु धवश्च खदिरौच इति। खदिरौ इत्यत्र यद् औ-विभक्ति तत् उभयपदव्यापिनी धवपदे तु सुविभक्त्यभावात्' अत एवात्रापि लक्षणा न स्यात्।

समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते, तदाऽहिनकुलमित्यादौ तु परपदेऽहिनकुलसमाहारे लक्षणा, पूर्वपदं तु तात्पर्यग्राहकम्। तथाहि-'पितरौ 'श्वशुरौ' इत्यादौ पितृपदे जनकदम्पत्योः, श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा।

कर्मधारयसमासे तु नीलोत्पलमित्यादौ अभेदसम्बन्धेन नीलपदार्थे उत्पलपदार्थे प्रकारः। तत्र च न लक्षणा। लक्षणा तु तत्रैव यत्र तात्पर्यानुपपत्त्या मुख्यार्थबाधः स्यात्।

उपकुम्भमर्धपिप्पलीत्यादौ अव्ययीभावसमासे परपदे तत्सम्बन्धिनी लक्षणा,

पूर्वपदार्थप्रधानतया च अन्वयबोधः इत्थञ्च समासे न क्वापि शक्तिः पदशक्त्यैं निर्वाह्यादिति दिक् ।

प्रश्न ३०—आसक्तिशब्दस्यकोऽर्थः ? कथं च आसक्ति शाब्दबोधे कारणम् ?

उत्तरम्—आसक्तिशब्दस्यार्थः—

'सन्निधानं तु पदस्यासत्तिरुच्यते' इति विश्वनाथः। अर्थात् अव्यवधानेन पदानामुपस्थितिरासक्तिः एवं च अन्वयप्रतियोग्यनुयोगिपदयोः अव्यवधानम् आसक्तिः ।

वस्तुतस्तु अव्यवधानज्ञानस्यानपेक्षिततत्वात् यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः आसक्तिः शाब्दबोधे कारणम् ! तेन प्रहरे-प्रहरे असहोच्चारितानि 'घटमानय' इत्यादि पदानि न शाब्दबोधे कारणानि । न वा अन्यशब्दव्यवधानेन उच्चारितानि पदानि शाब्दबोधे कारणानि। अत एव 'गिरिर्भुक्तमग्निमान् देवदत्तेन इति न शाब्दबोधे कारणम् ।

क्वचित् व्यवधाने सत्यपि शाब्धबोधो भवति। अन्वयानुपपत्तेरभावात् यथा—'नीलो घटो द्रव्यं पटः' इत्यत्रान्वयसम्भवे शाब्दबोधस्य सम्भवः। अतोऽव्यवधानं न सर्वत्र शाब्दबोधे कारणम् अर्थात् क्वचित् व्यवधाने सत्यपि शाब्दबोधसम्भवः, क्वचिच्च व्यवधानेन शाब्दबोधस्य बाधः ।

यत्र तु व्यवधाने सत्यपि शाब्दबोधोभवति तत्र न्यायसिद्धान्तमुक्तावलीकारमतेन अव्यवधान-भ्रम एव शाब्दबोधे कारणम् ।

ननु शब्दस्तु अनित्यः, 'घटमानय' इत्यत्र 'आनय' इत्युच्चारणात् पूर्वमेव घटशब्दस्य नाशे सति कथं 'घटमानय' इत्यत्र एकक्रियात्मकः शाब्दबोधसम्भव इतिचेदत्रोच्यते—घटमानय इत्यत्र घ्—अ—ट्—अ—म्—आ—न्—अ—अय्— एतेषां वर्णानां समुच्चयः । अत्र उत्तरोत्तरवर्णोच्चारणे पूर्व-पूर्व-वर्णनाशः; एवम् अन्त्य अ वर्णो-च्चारणात्पूर्वमेव निखिलवर्णनाशे सत्यपि अनुरणनजन्य-संस्कारवशात् 'घटमानय' इति वाक्यं स्फोटरूपेण सममेव बुद्धौ स्फुरति तेनैव शाब्दबोधः सम्भवति। अतएव आसत्तिः शाब्दबोधे कारणमिति युक्तमेवेति दिक् ।

प्रश्न ३१—"द्वारमि" त्युक्ते "पिधेहि" इति पदस्यैव किमिति अध्याहारः आवश्यकः ? तदर्थाक्षेपेणैव शाब्दबोधः किन्न स्यात् ?

उत्तरम्—'शाब्दी ह्याकांक्षा शब्देनैव पूर्यते।' इति न्यायेन यत्रद्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव शाब्दबोधः सम्भवति, न तु पिधानादिरूपार्थज्ञानात्पदजन्यतत्तत्पदार्थोपस्थितेस्तत्तच्छाब्दबोधे हेतुत्वात्।

किञ्च क्रियाकर्मपदानां तेन तेनैव रूपेणाकांक्षितत्वात्, तेन क्रियापदं विना कथं शाब्दबोधः स्यात्। तेन पुष्पेभ्य इत्यादौ स्पृहयति-इत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः क्रियापदाध्यहार आवश्यक एव। अतः तदर्थाक्षेपेण शाब्दबोधो न सम्भवः अत एवोक्तं 'शाब्दीह्याकांक्षा शब्देनैव पूर्यते' इति दिक्।

इति शब्दखण्डं समाप्तम्।

## स्मृति-निरूपणम्

प्रश्न ३२——स्मृत्यनुभवयोः कार्यकारणभावः विवेचनीयः [१९८६]

उत्तरम्——संस्कारजन्यं ज्ञानं स्मृतिः । अनुभवात्संस्कारो भवति, संस्कारात् स्मृतिर्जायते । पुरुषो हि यत् किंचित्पश्यति, शृणोति, स्पृशति जिघ्रति वा तदेतस्मादनुभवात्तस्य तत्तद्वस्तुविषयकाः संस्काराः जायन्ते । ते च संस्कारास्तस्मिन् निभृतास्तिष्ठन्ति उद्बोधकविशेषाच्चोद्बुद्धास्तत्तद् विषयकां स्मृतिं जनयन्ति । घटविषयकादनुभवाद् घटविषयकः संस्कारो जायते उद्बुद्धाच्च घटविषयकात्संस्काराद् घटविषयका स्मृतिर्जायते । अतएव पूर्वानुभवः स्मृतौ कारणम्, सचानुभवः संस्कारद्वारा स्मृतिं जनयतीति स्मृत्य-नुभवयोः कार्यकारणभावः समुचित इतिदिक् ।



## मनो निरूपणम्

प्रश्न ३३—मनसः सिद्धिं प्रदर्श्य तस्याणुत्वं साधनीयम् (१९८६)

उत्तरम्—'साक्षात्कारे सुखादीनां करणं मन उच्यते।' एतेन मनसि प्रमाणं दर्शितम्। मनसोऽतीन्द्रियत्वेन प्रत्यक्षायोग्यत्वात् अनुमानं प्रमाणयति-साक्षात्कार इति। तथाहि सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवदित्यनुमानेन मनसः करणत्वसिद्धिः।

नचैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम्, लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः, एवं च सुखादीनांमसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिरिति।

## मनसः अणुत्वसाधनम्

मनसोऽणुत्वे प्रमाणमाह विश्वनाथपंचाननः—'अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते। अर्थात् चाक्षुषादिज्ञानानामेककालानुत्पत्तिकत्वान्मनसोऽणुत्वं सिद्ध्यति। तथाहि—नानेन्द्रियाणां सत्यपि विषयसंनिधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानमुत्पद्यते, यदसम्बन्धाच्च परैर्ज्ञानं नोत्पद्यते तन्मनः। मनसो विभुत्वे चासंनिधानं न सम्भवतीति न विभु मनः। एवं च तस्य विभुत्वाभावे मनोऽणु, विभुभिन्नत्वे सति नित्यपरिमाणाश्रयत्वात् परमाणुवदित्यनुमानेन मनसोऽणुत्वं सिद्ध्यतीति दिक्। इति मनो निरूपणम्।

## अथ गुणनिरूपणम्

**प्रश्न ३४**––गुणत्वजातौ प्रमाणं प्रदर्श्य गुणस्य लक्षणं निरूप्यताम् ।

**उत्तरम्**––ननु मानाभावात् गुणत्वं नामजातिर्नास्तीति चेन्न, द्रव्यकर्म-भिन्नजातिमन्निष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यता-निरूपितदण्डनिष्ठकारणतावदित्यनुमानेन चतुर्विंशतिगुणानुगतगुणात्मकधर्म-सिद्धेः, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वात् । ततश्च गुणत्वं जातिः, जातिबाधकरहितत्वे सति अनुवृतप्रत्ययहेतुत्वात् द्रव्यत्वादिवदित्यनुमानेन गुणत्वजातिः सिद्धयति । इत्थं च गुणत्व जातौ अनुमानमेव प्रमाणमिति ।

## गुणस्य लक्षणम्

द्रव्याश्रितत्वं गुणत्वमिति गुणस्य लक्षणम् । न च इदं लक्षणं कर्मण्यति-व्याप्तं तस्यापि द्रव्याश्रितत्वादितिवाच्यम् द्रव्याश्रितत्वमित्यस्य द्रव्यत्वव्यापक-तावच्छेदकसत्ताभिन्नजातिमत्त्वमित्यर्थे तात्पर्यात् । गुणत्वमेव द्रव्यत्वव्यापक-तावच्छेदकम्, तद्वत्वं च गुणानामस्त्येवेति समन्वयः । द्रव्यत्वं कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेदकमाकाशादौ द्रव्यकर्मणोरभावात् । एवं च सत्तावत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वमित्यपि गुणस्य लक्षणम् । इति दिक् ।

**प्रश्न ३५**––के मूर्तगुणाः ? केचामूर्तगुणाः ? उभयगुणाश्च के ?

**उत्तरम्**––मूर्तं गुणानां विषये कारिकावलीकारेणोक्तम्—

> रूपं रसः स्पर्श-गन्धौ परत्वमपरत्वकम् ।
> द्रवत्व-स्नेह-वेगाश्चमता मूर्त गुणा अमी ॥

**अस्यार्थः**—रूप-रस-स्पर्श-गन्ध-परत्व-अपरत्व-द्रवत्व-स्नेह-वेगाः—एते नव गुणा मूर्तगुणाः कथ्यन्ते, यतो हि अमूर्तेषु न वर्तन्ते एते गुणाः, अत एव मूर्तगुणाः सन्ति

**के चामूर्तगुणाः ?** इति जिज्ञासायामुत्तरयति कारिकावलीकारः—

धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च।
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ॥

**अस्यार्थः**—धर्म-अधर्म-भावना-शब्द-बुद्धि-सुखःदुःख-इच्छा-द्वेष-प्रयत्नाः—एतेऽमूर्तगुणाः सन्ति। यतो हि एते मूर्तेषु न वर्तन्तेऽतोऽमूर्त गुणाः कथ्यन्ते।

**उभयगुणाश्च के ?**—संख्यादयो विभागान्ता उभयेषां गुणामताः। इति विश्वनाथः। **अस्यार्थः**—

संख्या-परिमाण-पृथकत्व-संयोग-विभागाः—एते मूर्तेषु अमूर्तेषु च वर्तन्ते ऽतएव ते उभयगुणाः कथ्यन्ते। इति दिक्।

**प्रश्न ३६**—रूपत्वजातौ प्रमाणमुपन्यस्य नीलादिरूपाणामैक्यं खंडयता चित्ररूपस्य प्राच्यमतेन सत्त्वं नव्यमतेन चासत्त्वमुपपाद्यताम्।

**उत्तरम्**—सर्वेषु रूपेषु रूपपदशक्तिग्रहायाऽवश्यकल्पनीयायाः सकलरूपोपस्थिते-र्निर्वाहायाऽवश्यकल्प्यसामान्यलक्षणाजन्य प्रत्यक्षसिद्धा रूपत्वजातिः तथा च सकलरूपेषु एकस्या जातेः सत्त्वे एव तज्ज्ञानरूपसामान्यलक्षणया सकलरूप-प्रत्यक्षसम्भवात् सर्वेषु रूपेषु रूपपदशक्तिग्रहः सम्भवतीति तन्निर्वाहाय सकल-रूपानुगतो रूपत्वाख्य एको धर्मोऽवश्यमभ्युपगन्तव्यः, तस्य जातित्वं जातिबाध-करहितत्वे सति अनुवृतप्रत्ययहेतुत्वात् सिद्धयति।

न च नीलपीतादिषु इदं रूपमिदं रूपमित्यनुगतप्रतीतेरभावे कथं रूपत्व-जातिः प्रत्यक्षसिद्धेति वाच्यम्, तत्र इदं रूपमिदं रूपमित्यनुगतप्रतीतेरभावेऽपि अयं वर्णोऽयं वर्ण इत्याद्यनुगतप्रतीतिसम्भवात्।

नचैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकम् न जातिरिति वाच्यम्, नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पाद-विनाशशालितया नानात्वात्।

ननु तादृशप्रतीतौ नीलसमवाय-रक्त-समवाययोरेवोत्पाद विनाशविषयकोऽसौ प्रत्यय इति चेन्न, तत्प्रतीत्या समवायानुल्लेखात्।

न च स एवायं नील इति प्रत्यक्षबलाल्लाघवाच्च नीलादीनामैक्यमिति

वाच्यम्, तादृशप्रत्यक्षस्य सैवेयं गुर्जरीति प्रत्यक्षस्य इव तत्सजातीयविषयत्वात् लाघवस्य च नीलो नष्टो रक्त उत्पन्न इत्यादि प्रत्यक्षबाधितत्वात् ।

इत्थं नीलादीनामैक्यं खण्डितम् । ननु शुक्ल-नील-पीत-रक्त-हरित-कपिशानां नानारूपाणामेवहि एकत्र स्थित्या चित्ररूपस्य सम्भवात कथं नील-पीत-रक्तादि-समूहातिरिक्तं चित्रं रूपं सिद्धचतीतिचेन्न नीलपीताद्यवयवारब्धस्यावयविनो नहि नीरूपत्वं, तथा सति तस्य अप्रत्यक्षप्रसंगात् । नापि तत्र व्याप्यवृत्तिनी-लादिकमुत्पद्यते, पीतावच्छेदेनापि तत्र नीलोपलब्धिप्रसंगात् ।

नापि तत्र अव्याप्यवृत्ति नीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानाम-व्याप्यवृत्तित्वे विरोधात् । तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते । अत एव एकं चित्ररूपमित्यनुभवोऽपि, नानारूपकल्पने गौरवात् । इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्ति-रिति प्राञ्चः ।

**नव्यास्तु**—तत्र अवयवारब्धेऽवयविनि अव्याप्य वृत्त्येव नानारूपम्, नीलादेः पीतादिप्रतिबन्धकत्वकल्पना गौरवात् । अत एव—

लोहिनो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतःखुर विषाणाभ्यां स नीलो वृष उच्यते ॥

इत्यादिशास्त्रमुपपद्यते । न च व्याप्याव्याप्यवृत्तिजातीयद्वयोर्विरोध इति वाच्यम्, मानाभावात् । नापि तत्र लाघवादेकं चित्ररूपम्, अनुभवविरोधादिति वदन्ति ।

**प्रश्नः ३७—चित्रवर्णे [ कुर्वूरे ] रूपत्वं साधयत ?**

**उत्तरम्**—शुक्ल-नील-पीत-रक्त-हरितकपिश-कर्वुर-भेदेन रूपं सप्त प्रकारकं भवति । तत्र नैयायिकाः शुक्लादिकपिशपर्यन्तं रूपं षड्विधमेव स्वीकुर्वन्ति । तेषां मते प्रमाणाभावात् चित्रं तु न पृथक् रूपम् ।

तन्न समीचीनम्, नीलपीतादिनानावर्णयुक्ते एकस्मिन् पटे नीलादिरूप-व्यवहारासम्भवात् । न च तन्नीलरूपमिति वाच्यम्, प्रत्यक्ष विरोधात् । नापि व्याप्य वृत्ति नीलादिरूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसंगात् ।

नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तत्वे विरोधात् । तस्मान्नानाजातीयरूपैरवयविनि विजातीयं सप्तमं चित्रं रूपं सिद्धयतीति दिक् ।

**प्रश्नः ३८**—वैशेषिकाभिमतां पाकप्रक्रियाम्प्रदर्श्यं तत्र नैयायिकाभिप्रेता पद्धतिः प्रतिपाद्यताम् ॥

अथवा—वैशेषिक सम्मतां पीलुपाकप्रक्रियां निरूप्य न्यायसम्मत-पिठर-पाकप्रक्रियामपि प्रदर्शयत ।

**उत्तरम्**—पाक विषये वैशेषिकाभिमता पाकक्रिया प्रदर्शयता विश्वनाथ-तर्क पचाननेनोक्तं कारिकावल्याम्—

> एतेषां पाकजत्वन्तु क्षितौ नान्यत्रकुत्रचित् ।
> तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ॥ इति ॥

**अस्यार्थः** रूपरस-गन्ध-स्पर्शाश्चत्वारो गुणाः पृथिव्यां पाकजाः । अन्यत्र जलादिषु न पाकजाः । पीलुपाकवादिनो वैशेषिकाः परमाणौ एव पाकमभ्युपगच्छन्ति । तथाहि—पक्वघटारम्भकत्र्यणुकस्यापक्वमनुपलब्ध्या तत्र पाके सिद्धे तदवयवे द्वयणुकेऽपि पाकः स्वीकरणीयः, अन्यथा द्वयणुकगतश्यामरूपस्य स्वाश्रय समवेतत्व सम्बन्धेन त्र्यणुके सत्वात् तत्र रक्तरूपं नोपपद्यते; नीलपीतावयवारब्धे घटे नीलाद्युत्पत्ति वारणाय समवायेव रक्तरूपं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन रक्तान्यरूपत्वादिना प्रतिबध्यप्रतिबन्धकभावस्य स्वीकारात् । एवं च तदवयव-परमाणवपि पाकः स्वीकार्यः, अन्यथा परमाणुगतश्यामरूपेण पुनर्द्वयणुके श्याम-रूपोत्पत्त्या तस्योक्तसम्बन्धेन त्र्यणुके सत्त्वात् पुनस्तत्र रक्तरूपोत्पादानुपपत्तिः । अवयविना चावष्टब्धेष्ववयवेषु पाको न सम्भवति, परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसु संयोगात द्वयणुकादि प्रक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशे झटिति व्यूहान्तरोत्पत्तिश्चेति ।

पिठरपाकवादिनां नैयायिकानां मते द्वयणुकादावयविन्यपि पाकः सम्भवति । तेषामयमाशयः—अवयविनां सच्छिद्रत्वात् वह्नेः सूक्ष्मावयवैरन्तः प्रविष्टैर

चयत्रेष्वत्रष्टद्व्येष्वपि पाको न। विरूद्धयते अन्यथा अनन्तावयवितन्नाशकल्पने गौरवम्।

इत्थं च 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते। यत्र तु न प्रत्यभिज्ञा, तत्रावयविनाशोऽपि स्वीक्रियत इति दिक्।

प्रश्नः ३९--किं नाम पृथक्त्वम्? अन्योऽन्याभावेनैवास्य चरितार्थता कुतो न? पाठ्यग्रन्थरीत्या प्रतिपादयत।

उत्तरम्—पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम्। तन्नित्यादिकं संख्यावत्। तथाहि-नित्येष्वेकत्वं नित्यम्, अनित्येष्वनित्यम्। अनित्यमेकत्वं तु आश्रय-द्वितीयक्षणे चोत्पद्यते, आश्रयनाशान्नश्यति, तथैकपृथक्त्वमपि द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः।

ननु अयमस्मात्पृथगित्यादौ अन्योऽन्याभावो भासते, तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते? न चास्तु पृथक्त्वम्, न तु अन्योऽन्याभावः इति वाच्यम्, रूपं न घट इति प्रतीत्यनापत्तेः। नहि रूप घटावधिकं पृथक्त्वम् गुणान्तरमस्ति, न वा घटे घटावधिकं पृथक्त्वमस्ति, येन परम्परा सम्बन्धः कल्प्यते। इत्यत आह—'अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा।

ननु प्रतीति द्वये शब्दवैलक्षण्यमेव, नत्वर्थवैलक्षण्यमिति चेन्न, अर्थभेदं विना घटात्पृथगितिवत् 'घटो न पट' इत्यत्रापि पञ्चमी प्रसंगात्। तस्मात् यदर्थ योगे पंचमी सोऽर्थो नञर्थान्योऽन्याभावतो भिन्न एवेति पृथक्त्वं गुणान्तरं कल्पनीयमेवेति दिक्।

प्रश्नः ४०—संयोगस्य किं लक्षणम्? तद्भेदाश्च के? सोदाहरणं सोपपत्तिकं प्रदर्शयत।

उत्तरम्—अप्राप्तयोः पृथक्भूतयो र्द्वयोर्द्रव्ययोर्या प्राप्तिः सैव संयोगः कथ्यते इति संयोगस्य लक्षणम्। अत एवोक्तं विश्वनाथतर्कपंचाननेन—

"अप्राप्तयोस्तु या प्राप्तिः सैव संमोग ईरितः।"

कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः।
तथोभयः स्पन्दजन्यो भवेत् संयोगजोऽपरः'

आदिमः श्येन-शैलादि-संयोगजः परिकीर्त्तितः ।
मेषयोः सन्निपातोयः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरु-कुम्भयोः ॥
तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥

अर्थात् अप्राप्तयोः = पृथक्भूतयोर्द्रव्ययोः प्राप्तौ यः परस्परः सम्बन्धः स संयोगः । स च त्रिविधः—( १ ) अन्यतर क्रियाजन्यः, यथा—श्येन-शैल संयोगः । अत्र शैलः स्थिरः किन्तु श्येनक्रियया शैलसंयोगोऽस्ति । एकस्यैव क्रियया द्वयोः संयोगः ।

[२ ] उभयक्रियाजन्य संयोगः, यथा—द्वयोर्मेषयोः संयोगः । अत्र द्वयोर्मेषयोः क्रियाजन्यः संयोगोऽस्ति ।

[ ३ ] संयोगजन्यः संयोगः । यथा—कपालतरुसंयोगात् 'तरु-घट-संयोगः' । एवंच कर्मजोऽपि द्विविधः—[ १ ] अभिघातः शब्दहेतुर्यथा—हस्तादिना ताड़ने । [ २ ] नोदनं शब्दहेतुर्यथा—साधारणतया योगे ।

ननु संयोगज-संयोगे मानाभावः, यत्रकपालक्रियया कपाल तरुसंयोगः ततः कुम्भतरु संयोगस्तत्र कपालक्रियाया एव कुम्भ तरु संयोगं प्रति कारणत्वं नतु कपालतरु संयोगस्येति चेन्न, समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वम्, कुम्भे समवायेन क्रियाया अभावेन कुम्भे तरुसंयोगानुपपत्तेः, क्रिया याः सामानाधिकरण्येन हेतुत्वान्तरकल्पनापेक्षया समवायेन संयोगस्यैव हेतुत्व-कल्पनौचित्यादिति दिक् ।

**प्रश्न ४१**—विभागजविभागस्य भेदौ सोदाहरणं निरूप्येताम् ।

**उत्तरम्**—विभागजविभागः कारणमात्रविभागजन्यः; कारणाकारण-विभागजन्यश्चेति द्विविधः । तत्राद्यो यथा—यत्रैककपाले कर्म, ततः कपाल-द्वयविभागः, ततो घटारम्भकसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्मनाश इति ।

न च तेन कर्मणेन कथं देशान्तरविभागो न जन्यते इति वाच्यम् । एकस्यैव कर्मण: आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्याऽनारम्भकसंयोगप्रतिद्वन्द्वि-विभागजनकत्वस्य च विरोधात् । अन्यथा विकसत्कमलकुड्मलभंगप्रसंगात् । यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्, तदाऽऽराम्भकसंयोगप्रतिद्वन्द्वि-विभागं न जनयेत् ।

न च कारणविभागेनैव द्रव्यनाशात् पूर्वम् देशान्तरविभाग: कुतो न जन्यते इति वाच्यम् । आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात् ।

द्वितीयस्तावत् यत्र उस्तक्रियया हस्ततरुणविभागस्तत: शरीरेऽपि विभाग-प्रतीतिर्भवति तत्र शरीरतरुविभागे हस्तक्रिया न कारणमं, व्याधिकरणत्वात् । शरीरे तु क्रिया नास्त्येव, अवयविकर्मणो यावदवयवकर्मनियतत्वात् ।

अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत एवेति दिक् ।

**प्रश्न: ४२**—अप्रमाया: किं लक्षणम् ? तद्भेदाश्च के ? तेषां लक्षणो-दाहरणानि विश्वनाथोक्तदिशा प्रदर्शयत ।

**उत्तरम्**—ज्ञानं द्विविधम् १– अप्रमा २– प्रमाचेति । तत्र अप्रमाया **लक्षणम्**—तदभाववति तत्प्रकारकं ज्ञानम् अप्रमा, इति अप्रमाया लक्षणम् । तत्र प्रमायामतिव्याप्तिवारणाय 'तदभाववति' इतिपदस्य निवेश: । तदभाववद-विशेष्यकतदभावप्रकारकप्रमायामतिव्याप्तिकारणाय 'तत्प्रकारकम्' इति पदस्य निवेश: । इच्छायामतिव्याप्तिवारणाय 'ज्ञानम्' इति पदस्य निवेश: ।

तस्या अप्रमाया द्वौ भेदौ— (१) विपर्यास:=भ्रम: यथा—शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् शंखादौ 'पीत: शंख:' इत्याकारकं ज्ञानं वा विपर्यास: ।

(२) संशय:=सन्देह:—एकत्र भावाऽभावप्रकारकं ज्ञानं संशय: । यथा— 'स्थाणुर्वा पुरुषो:वे' ति । साधारणादि-धर्मज्ञानं संशयकारणम् । अत्र स्थाणु-पुरुषोभय साधारणो धर्मं उच्चैस्तरत्वम् ।

अप्रमाया जनको भवति दोषः, स च पित्तदूरत्वादिरूपो नानाविधः। 'पीतः शंखः' इत्यत्र पित्तदोषः। 'शुक्तिकायामिदं रजतम्' इत्यत्र दूरत्वदोषः। इति दिक्।

प्रश्नः ४३–प्रमात्वस्य स्वतोग्राह्यत्वं निरस्य परतो ग्राह्यत्वमुपपाद्यताम्।

उत्तरम्—मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। तत्र गुरूणां प्रभाकराणां मते ज्ञानस्य स्वप्रकाशकत्वात् ज्ञानप्रामाण्यं ज्ञानेनैव गृह्यते। भट्टानां मते ज्ञानमतीन्द्रियम्, किन्तु ज्ञानजन्यज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। एतेषां मतं न समीचीनम्, यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात् तदाऽनभ्यासदशापन्न ज्ञाने प्रामाण्यसंशयो न स्यात्, तत्र हि यदि ज्ञानं ज्ञातं, तदा त्वन्यते प्रामाण्यं ज्ञातमेवेति कथं संशयः? यदि तु ज्ञानं न ज्ञतं, तर्हि धर्मिज्ञानाभावात् कथं संशयः? तस्मात् ज्ञाने प्रामाण्यमनुमेयम् तथाहि—

इदं ज्ञानं प्रमा संवादि (सफल) प्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा। इत्यादि प्रकारेण ज्ञाने प्रमात्वमनुमेयम्।

न च प्रमात्वग्राहकसामग्री सत्त्वे कथमग्रिमसंशयानुरोधात् प्रमात्वाग्रह इति वाक्यम्, अग्रिमसंशयानुरोधेन संशयजनकदोषस्य प्रमात्वनिश्चयप्रतिबन्धकत्वकल्पनादिति दिक्।

प्रश्नः ४४—प्रमालक्षणे विशेषणस्थ तद्वद्विशेष्यकत्वस्य सार्थक्यमुपपाद्यताम्।

उत्तरम्—ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वदविशेष्यकत्वं विशेषणं व्यर्थम्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यान्मीमांसकानां मते भ्रमस्याभावादिति वाच्यम्, तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम् अस्तु वा तत्रापि रजतभेदाग्रह एव कारणमिति।

न चान्यथाख्यातिः सम्भवति, रजत-प्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावाद् रंगे रजतबुद्धेरनुपपत्तेरिति चेन्न, सत्यरजतस्थले प्रवृत्तिम्प्रति विशिष्टज्ञानस्य हेतुताया, क्लृप्तत्वादन्यत्रापि तत्कल्पनात् ।

नच सम्वादिप्रवृत्तौ तत्कारणं, विसम्वादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् । इत्थं च रंगे रजतत्वविशिष्टबुद्धयनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः, फलमुखगौरवस्यादोषत्वात् । इत्थं चान्यथाख्यातो 'रंगं रजततयाऽवेदिषमिति प्रत्यक्षमेदप्रमाणमिति तद्वारणाय प्रमालक्षणे विशेषणस्य तद्वद्विशेष्यकत्वस्य सार्थक्यं सिद्धमेवेति दिक् ।

**प्रश्नः ४५**—अन्यथाख्यातिवादः निरूपणीयः । [१९८६]

**उत्तरम्**—**अन्यथाख्यातिवादः**—न यथाख्यातिः=अतद्धर्मवत्तया प्रतीतिरिति अन्यथाख्यातिः । ननु रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावाद् रंगे रजतबुद्धेरनुपपत्तेर्न अन्यथाख्यातिः सम्भवतीति चेन्न, सत्यरजतस्थले प्रवृत्तिम्प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात् ।

न च संवादिप्रवृत्तौ तत्कारणं विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् ।

प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वसिद्धौ च रंगे रजतत्वविशिष्टबुद्धयनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषत्वात् ।

किञ्च यत्र रंगरजतयोरिमे रजते रंगेवेति-ज्ञानं जातं तत्र न कारणबाधोऽपि । अपि च यत्र रंगरजतयोरिमे रजतरंगे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्ति-निवृत्ति-स्यातां रंगे रंगभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात्, मीमांसकमते दोषादेव रंगे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् ।

किञ्च अनुमितिम्प्रति व्याप्यवद् भेदाग्रहस्य हेतुत्वे जलह्रदेवह्निव्याप्य-धूमवद्भेदाग्रहादनुमितिर्निराबाधा । यदि च विशिष्टज्ञानं कारणं तदाऽयो-

गोलकेवह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम् । तथा च अनुव्यवसाय एवान्यथाख्यातौ प्रमाणमिति दिक् ।

**प्रश्नः ४६**——व्याप्तिग्रहोपायं प्रदर्श्य "तर्कःक्वचिच्छंकानिवर्तकः" इति कारिकांशस्याशय उद्घाटचताम् ।

**उत्तरम्**——व्याप्तिग्रहे व्यभिचाराग्रहः सहचारग्रहश्च कारणम्, व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणम् । **तदेवोक्तं विश्वनाथतर्कपंचाननेन कारिकावल्याम्**——

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे, तर्कःक्वचिच्छंका निवर्तकः ॥ इति

एवम् अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि व्याप्तिग्रहे हेतुता । भूयोदर्शनं तु न कारणम्——व्यभिचारास्फुतौ सकृद्दर्शनेऽपि क्वचिद् व्याप्तिग्रहात् ।

यत्र तु भूयोदर्शनादपि शंका नापैती तत्र विपक्षबाधकतर्कोऽपेक्षितः । इत्याशयेनैवोक्तं कारिकावलीकारणतर्कपंचानविश्वनाथेन——

तर्कः क्वचिच्छंकानिवर्तक"——तथाहि——बह्निविरहिण्यपि धूमः स्यादिति यद्याशंका भवति तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्तते । यद्ययं बह्निमान्न स्यात्तदा धूमवान्न स्यात्, कारणं विना कार्यानुत्पद्यतेरितितर्केण निवर्तनीया ।

यदि च क्वचित् कारणं विनाऽपि कार्यं भविष्यति तदा अहेतुक एव भविष्यतीति तत्राप्याशंका भवेत्, तदा सा व्याघातादपसारणीया । यदि हि कारणं विना कार्यम् स्यात्, तदा धूमार्थम् वह्नेस्तृप्त्यर्थं भोजनस्य च नियमत उपादानं न स्यादिति । यत्र तु स्वत एव शंका नावतरति तत्र न तर्कापेक्षा । इत्याशयेनैवोक्तं 'तर्कः क्वचिच्छंकानिवर्तकः ।' इति दिक् ।

**प्रश्नः ४७**——उपाधेर्लक्षणमुपपाद्य तस्य मतभेदेन प्रयोजनं प्रदर्श्यताम् ।

**उत्तरम्**——"साध्यस्य व्यापको यस्तु हेतोर्व्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयंप्रदर्श्यते ॥

इत्युक्तं कारिकावलीकारेण विश्वनाथतर्कपंचाननेन उपाधिलक्षण-निरूपण प्रसंगे । **तथा च "साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिः ।"**—इत्युपाधिलक्षणम् । ननु काकः श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावात् श्यामत्वस्य घटादावपि सत्त्वात्, एवं च वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्रोद्भूतरूपवत्वं नोपाधिः स्यात्प्रत्यक्षत्वस्यात्मादिषु सत्त्वातत्र च रूपाभावात्, एवमेव ध्वंसो विनाशी जन्यत्वादित्यत्र च भावत्वाभावादिति चेन्न, यद्धर्मावच्छिन्नसाधनाव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात् ।

एवं च प्रथमे—मित्रातनयत्वावाच्छिन्नश्यामत्वस्य व्यापकं शाक-पाकजन्यत्वं तदवच्छिन्नसाधनाव्यापकं च, द्वितीये पक्षधर्मवहिद्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वम्, तदवच्छिन्नसाधनाव्यापकञ्च, तृतीये च ध्वंसो विनाशी-जन्यत्वावच्छिन्नविनाशी त्वस्य व्यापकं भावत्वम्, तदवच्छिन्नसाधना व्यापकञ्चेति सर्वोपपत्तेः ।

एवं च हेतौ उपाधिव्यभिचारेण साध्यव्यभिचारस्यानुमानमेवोपाधेः प्रयोजनम् । तथाहि:—अत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्, यथा—पर्वतो धूमवान् बह्नेरित्यादौ वह्निर्धूमव्यभिचारी तदव्यापकार्द्रेन्धन-संयोगव्यभिचारित्वादिति । व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् ।

यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्य-व्यभिचारानुमानम्, यथा—काकः श्यामो मित्रातनयत्वादित्यादौ मित्राततयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्व व्यभिचारित्वादिति ।

केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः प्रयोजनम् । तथाहि—अयोगोलकं धूमवद्बह्नेरित्यादौ—अयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावादितिसत्प्रतिपक्षसम्भवात् । इत्थं च साधकव्यापकोऽपि क्वचिदुपाधिः । यथा—करका पृथिवी, कठियंयोगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम् ।

नचात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम् सर्वत्र उपाधेर्दूषणान्तर-साङ्कर्यात् । एतत्पक्षे च साधकव्यापकः पक्षावृत्तिरुपाधिरिति वदन्ति । इति दिक् ।

**प्रश्नः ४६**—शब्दोपमानयोरनुमानविधयैव प्रामाण्यम्, नतु पृथगिति वैशेषिकमतमुपपाद्य निरस्यताम् ।

**उत्तरम्**—वैशेषिकाणां मते प्रत्यक्षम्, अनुमानञ्चेति प्रमाणम् द्विविधम् । शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यम् । तथाहि—दण्डेन 'गामानये' त्यादिलौकिकपदानि, 'स्वर्गकामो यजेत' इत्यादि वैदिकपदानि वा तात्पर्यविषय-स्मारितपदार्थ संसर्गज्ञानपूर्वकाणि, आकांक्षादिमत्पदकदम्बत्वात्, 'घटमानये'ति पदकदम्बवत् यद्वा एते पदार्था मिथः संसर्गवन्तः, योग्यतादिमत्पदोपस्थापित-त्वात्, तादृशपदार्थवत् ।

ननु दृष्टान्ते साध्यसिद्ध्यभावात् कथं व्याप्तिग्रहः इति चेन्न; दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धेः ।

एवं गवयव्यक्ति प्रत्यक्षानन्तरमुपमानस्थले गवयपदं गवयत्व प्रवृत्तिनि-मित्तिकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे यद्यत्र वृद्धैः प्रयुज्यते तत्तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्व प्रवृत्ति निमित्त-कम् । यद्वा गवयपदं सप्रवृत्ति निमित्तकम् साधुपदत्वात् इत्यनुमानेन पक्षधर्मता-बलाद् गवंयत्व प्रवृत्तिमित्तकत्वं भासते ।

इति वैशेषिकमतं न समीचीनम्, व्याप्तिज्ञानं विनाऽपि शाब्दबोधस्य अनुभ-वसिद्धत्वात् । सर्वत्र शब्दश्रवणाद्यनन्तरं नहि व्याप्तिज्ञाने प्रमाणमस्ति ।

तथापि सर्वत्र शाब्दबोधस्थले यदि व्याप्तिज्ञानं कल्पयित्वा शब्दोपमानेऽनुमाने अन्तर्भाव्येते तदा सर्वत्र अनुमितिस्थले पदज्ञानं प्रकल्प्य अनुमानं शब्दे कथन्ना-न्तर्भाव्यते ? तस्मात् शब्दोपमानयोः प्रामाण्यं पृथगेवेति दिक् ।

**प्रश्नः ४९**—अनुमानभेदान् निरूप्य व्यतिरेकव्याप्तिर्निरूप्यताम् ।

**उत्तरम्**—अनुमानं हि त्रिविधम्—१—केवलान्वयि, २—केवलव्यतिरेकि

३—अन्वयव्यतिरेकि भेदात् । तत्रासद्विपक्षः केवलान्वयी । यथा—ज्ञेयमभिधेयत्वादित्यादौ । **तत्रहि**—सर्वस्यैव ज्ञेयत्वाद विपक्षासत्त्वम् ।

असत्पक्षः केवेलव्यतिरेकी । यथा—तत्र हि जलादित्रयोदशभेदस्य पूर्वमसिद्धतया निश्चित साध्यवतः सपक्षस्याभावः ।

एवं च सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा—पर्वतो वह्निमान्, धूमादित्यादौ । तत्र सपक्षस्य महानसादे विपक्षस्य जलह्नदादेश्च स सत्त्वादिति ।

**व्यतिरेकव्याप्ति-निरूपणम्**—तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणम् । व्यतिरेकव्याप्तिः—साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । तथा चोक्तं कारिकावल्यां विश्वनाथतर्कपंचाननेन—**'साध्याभावव्यापकत्वं हेत्वभावस्य यद् भवेत् ।'** इति । अर्थात् साध्याभावस्य व्यापको यदि हेत्वभावो भवेत् तदा व्यतिरेकव्याप्तिर्भवति ।

**अत्रेदं बोध्यम्**—यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिः ।

एवं च यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्न-प्रतियोगिताकवह्नयभावेन जलह्रदे संयोग सम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिद्धयतीति दिक् ।

**प्रश्नः ४८**—अर्थापत्तिः प्रमाणान्तरमस्तिनवा ? नास्ति चेत् क्व तस्य अन्तर्भावः ? पूर्वोत्तरपक्षप्रदर्शनपूर्वकं साधु प्रतिपाद्यताम् ।

**उत्तरम्**—ननु मीमांसकानां मते अर्थापत्तिरपि प्रमाणान्तरमस्ति । अनुपपद्यमानार्थदर्शनात् तदुपपादकी भूतार्थान्तरकल्पनम् 'अर्थापत्तिः' । **तथाहि**—'पीनो देवदत्तो दिवा न भुंक्ते' इति दृष्टे श्रुते वा देवदत्तस्य रात्रिभोजनं कल्प्यते । दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनमन्तरेण नोपपद्यतेऽतः पीनत्वान्यथानुपपत्ति प्रसूतार्थापत्तिरेव रात्रि भोजने प्रमाणम् । तच्च प्रत्यक्षानुमानादि प्रमाणेभ्यो भिन्नम्, रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात् ।

नैयायिकानां नये नैतत्समीचीनम्, रात्रिभोजनस्यानुमानविषयत्वात्। तथाहि--अयं देवदत्तो रात्रौ भुङ्क्ते, दिवाऽभुञ्जानत्वे सति पीनत्वात्। यस्तु न रात्रौ भुंक्ते, नासौ दिवाऽभुञ्जानत्वे सति पीनः, यथा दिवा रात्रौ चाऽभुञ्जानोऽपीनो, न चायं तथा, तस्मान्न तथेति केवलव्यतिरेक्यनुमानेनैव रात्रिभोजनस्य प्रतीयमानत्वात्। किमर्थमर्थापत्तिः पृथक्त्वेन कल्पनीयेति दिक्॥

**प्रश्नः ४९**--अभावः प्रमाणान्तरमस्ति न वा? अस्तिचेत् कथम्? नास्तिचेत् कथम्?

**उत्तरम्**--ननु मीमांसकानां मते अभावाख्यमपि प्रमाणान्तरमस्ति, तच्चाभावग्रहणायावश्यमङ्गीकरणीयम्। तथाहि--घटाद्यनुपलब्ध्या घटाद्यभावो निश्चीयते। अनुपलब्धिश्चोपलब्धेरभावः। इत्यभावप्रमाणेन घटाद्यभावः कथं न गृह्यते इति चेन्न, येनेन्द्रियेण या व्यक्ति गृह्यते तद्गताजातिस्तदभावश्च तेनैव इन्द्रियेण गृह्यते इति नियमाद् विशेषणतासन्निकर्षेण चक्षुरादिभिरेव घटाद्यभावस्य ग्रहणसम्भवादिति दिक्।

इति मिथिलाञ्चलीय मधुबनी मण्डलान्तर्गतढंगा हरिपुर बख्शी टोलस्थ-शारदा मन्दिर-संस्कृत विद्यालय-प्रधानाध्यापकेन बख्शी श्रीजयकान्तशर्मणा सम्पादिता न्यायसिद्धान्तमुक्तावल्याः प्रश्नोत्तरी समाप्ता।

